**स्वरूपत्वेन भेदं परिकल्प्याऽऽत्मनाऽऽत्मानं वेत्तीति[१]संव्यवहारः। "[२]आत्मनैवाऽऽत्मानं पश्यति" "स्वयमेवाऽऽत्मनाऽऽत्मानं वेत्थ त्वं पुरुषोत्तम" इति। नतु निरुपाधिकस्याऽऽत्मन एकत्वे स्वसंवेद्यता परसंवेद्यता वा संभवति। संवेदनस्वरूपत्वात्संवेदनान्तरापेक्षा च न संभवति यथा प्रकाशस्य प्रकाशान्तरापेक्षाया न संभवस्तद्वत्। बौद्धपक्षे स्वसंवेद्यतायां तु क्षणभङ्गुरत्वं निरात्मकत्वं च विज्ञानस्य स्यात्। "न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात्"। "नित्यं विभुं सर्वगतम्" "स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयः" इत्याद्याः श्रुतयो बाध्येरन्। यत्पुनः प्रतिबोधशब्देन [३]निर्निमित्तो बोधः**

---

सोपाधिकत्व इति। **काणादस्य स्वसंवेद्यत्वानङ्गीकारबलात्परवेद्यत्वं प्रसज्जत इत्यपि न वाच्यमित्याह**—संवेदनस्वरूपत्वादिति। **बौद्धेन स्वसंवेद्यं विज्ञानमिष्टं तव किं न स्यादित्यत आह**—बौद्धपक्ष इति। **[४]प्रत्यक्षस्य वर्तमानावभासकत्वात्क्षणान्तरविशिष्टे स्वात्मनि क्षणान्तरविशिष्टं तदेव विज्ञानं प्रत्यक्षं [५]न संभवति। अतः स्वात्मनि स्वयमेव विज्ञानं प्रत्यक्षं चे[६]द्वर्तमानक्षणमात्रं सत्त्वं स्यात्। स्वसंवेद्यत्वेन साक्षिणोऽनङ्गीकारा[७]न्निरात्मत्वं च स्यादेव तच्छ्रुतिविरुद्धमित्यर्थः। प्रतिबोधवाक्यस्यार्थान्तरं शङ्कते**—यत्पुनरिति। **ब्रह्माहमस्मीति चिन्तयतो यावच्चेतोव्यापृतिस्तावत्संप्रज्ञातसमा-**

---

आत्मा से आत्मा को जानता है, ऐसा सम व्यवहार सम्भव है। जैसा कि "आत्मा में ही आत्मा को देखता है", "हे पुरुषोत्तम! आप स्वयं ही अपने से अपने को जानते हो" इत्यादि वाक्यों द्वारा कहा गया है किन्तु निरुपाधिक आत्मा में एकत्व होने के कारण स्वसंवेद्यता या परसंवेद्यता सम्भव नहीं है। जैसे प्रकाश को किसी अन्य प्रकाश की अपेक्षा नहीं होती, ठीक वैसे ही संवेदनस्वरूप होने के कारण आत्मा को किसी अन्य ज्ञान की अपेक्षा सम्भव नहीं है।

और बौद्धमत में विज्ञान की वह स्वसंवेद्यता मानने पर ही उसकी क्षणभंगुरता और निरात्मकता (शून्यवाद) सिद्ध होगी ही। ऐसी स्थिति में "अविनाशी होने से विज्ञाता की विज्ञाति का लोप नहीं होता है।" "ब्रह्म नित्य, विभु और सर्वगत है", "वह यह महान् अजन्मा आत्मा अजर, अमर, अमृत और अभयरूप है" इत्यादि श्रुतियाँ बौद्धपक्ष में बाधित होने लग जायेंगी। इसके अतिरिक्त जिस प्रकार सुषुप्त पुरुष को विना निमित्त के ही हुए बोध को प्रतिबोध कहा गया है। ऐसे अर्थ की कल्पना

---

१. इति संव्यवहारः—इत्यर्थको व्यवहार इत्यर्थः। २. तमेव दर्शयति—आत्मनैवेत्यादिना। ३. निर्निमित्त इति—प्रमाणवृत्तिनिरपेक्ष इति यावत्। ४. प्रत्यक्षस्य वर्तमानावभासकत्वादिति—भूतभाविनोरनुमानैकगम्यत्वादिति भावः। प्रत्यक्षं प्रति विषयस्य कारणत्वेन सम्प्रत्यसतोर्भूतभाविनोः प्रत्यक्षासंभवादिति। ५. न संभवतीति—उत्तरक्षणविशिष्टविज्ञानं प्रति पूर्वक्षणविशिष्टस्य भूतत्वात् पूर्वं प्रति चोत्तरस्य भावित्वादिति भावः। ६. वर्तमानक्षणमात्रं सत्त्वं स्यादिति—सत्त्वस्य प्रमाणाधीनत्वात् प्रत्यक्षप्रमाणेन च वर्तमानक्षणमात्रविषयीकरणादिति भावः। ७. निरात्मत्वं च स्यादिति—यथा देहस्य साक्षिणैव सात्मत्वं तथा विज्ञानस्य साक्षिणैव सात्मत्वं संभवति, असाक्षिकत्वे तु निरात्मत्वमेव स्यादिति भावः। न च विज्ञानमेवाऽऽत्माऽऽत्मनश्च न साक्ष्यन्तरापेक्षया सात्मत्वमात्मत्वादेवान्यथा तवापि तुल्यं दूषणमिति शक्यं वक्तुं विज्ञानस्य क्षणभङ्गुरत्वेन देहादिवदात्मत्वायोगान्मम त्वात्मनो नित्यत्वान्नावद्यलेशोऽपीति ध्येयम्।

**प्रतिबोधनशब्दप्रयोगोऽस्ति। सुप्तप्रतिबुद्धो गुरुणा प्रतिबोधित इति। पूर्वं तु यथार्थम् ।।१२।।४।।**

**इह चेदवेदीदित्यवश्यकर्तव्यतोक्तिर्विपर्यये विनाशश्रुतेः। इह मनुष्यजन्मनि सत्यवश्यमात्मा वेदितव्य इत्येतद्विधीयते। कथमि[१]ह चेदिवेदीद्विदितवान्। अथ सत्यं परमार्थतत्त्वमस्त्यवाप्तं तस्य जन्म सफलमित्यभिप्रायः। न चेदिहावेदीन्न विदितवान्वृथैव जन्म। अपि च महती विनष्टिर्महान्विनाशो जन्ममरणप्रबन्धाविच्छेदप्राप्तिलक्षणः स्याद्यतस्तस्मादवश्यं तद्विच्छेदाय ज्ञेय आत्मा। [२]ज्ञानेन तु [३]किं स्यादित्युच्यते— भूतेषु भूतेषु चराचरेषु सर्वेष्वित्यर्थः। विचित्य पृथङ्निष्कृष्यैकमात्मतत्त्वं संसार-धर्मैरस्पृष्टमात्मभावेनोपलभ्येत्यर्थः। अनेकार्थत्वाद्धातूनाम्। न पुनश्चित्वेति संभवति**

---

**युक्तमित्याह**—पूर्वं त्विति। **गुरुपदेशे सत्यपि [४]प्रतिबोधं व्यापकात्मानुसंधानं विना परोक्षवगमा-[५]संभवात्सद्योमुक्तेश्चा[६]शास्त्रीयत्वादित्यर्थः ।।१२।।४।।**

**इह चेदवेदीदित्यादिवाक्यार्थं संगृहीतं विवृणोति**—इह मनुष्यजन्मनीत्यादिना। विरोधादिति।

---

अथवा गुरु द्वारा जगाया हुआ दोनों ही जगह में प्रतिबोध शब्द का प्रयोग होता है किन्तु इन तीनों में सबसे पूर्व किया गया व्याख्यान ही यथार्थ है।।४।।

"**इह चेदवेदीदथसत्यमस्ति**" यह आत्मसाक्षात्कार की अवश्य कर्तव्यता पर बल देती है क्योंकि इससे विपरीत अवस्था में श्रुति ने विनाश बतलाया है। इस मनुष्य जन्म के रहते हुए आत्मा को अवश्य जान लेना चाहिये। ऐसा विधान किया जाता है। कैसे? यदि इस जन्म में आत्मा को जान लिया तो उसे परमार्थ तत्त्व प्राप्त हो जाने के कारण सब ठीक है अर्थात् उसका जन्म सफल हो गया और यदि उसे इस जन्म में नहीं जाना तो उसका जन्म व्यर्थ ही गया। इतना ही नहीं प्रत्युत जन्म-मरण परम्परा की अवच्छिन्नतारूप बड़ी भारी क्षति होगी। अतः उस अनर्थ परम्परा के विच्छेद हेतु आत्मा को अवश्य जानना ही चाहिये।

आत्मज्ञान से क्या होगा? इसे बतलाते हैं। सम्पूर्ण चराचर प्राणियों में आत्मा का शोधन कर अर्थात् संसार धर्मों से असंस्पृष्ट एकमात्र आत्मतत्त्व को आत्मरूप से उपलब्ध कर विवेकी पुरुष (अमर

---

१. इह चेदित्यादि—यदि सत्यमवेदीदथ तदाऽस्तीत्यन्वयः। २. न चेदिहावेदीदित्यज्ञानेन महान् विनाशः स्यादित्युक्तं तर्हि ज्ञानफलमपि वक्तव्यमित्याशयवान् पृच्छति—ज्ञानेन त्विति। ३. किं स्यादिति—येन जन्मसाफल्यमुच्यत इति भावः। ४. प्रतिबोधं व्यापकेति—प्रतिबोधं व्यापको य आत्मा यद्व्याप्ताः सर्वे बौद्धप्रत्ययास्तदनुसंधानं साक्षित्वेन तद्विनेत्यर्थः। ५. असंभवादिति—अन्यथा विरोचनस्यापि सोऽभविष्यदिन्द्रवदिति भावः। ६. अशास्त्रीयत्वादिति—तस्य तावदेव चिरमित्यादिशास्त्रविरुद्धत्वावित्यर्थः। ज्ञानसंप्रदायानुपपत्त्या चोपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिन इत्यादिशास्त्रबाधप्रसङ्गात्।

**प्रतिबोधो यथा सुप्तस्येत्यर्थं परिकल्पयन्ति। सकृद्विज्ञानं प्रतिबोध इत्यपरे। निर्निमित्तः**

---

धिर्निवृत्ते[१] चेतोव्यापारे यः परमानन्दसाक्षात्कारः सौषुप्तानन्दसाक्षात्कारवत्सोऽसंप्रज्ञातसमाधिः प्रतिबोध उच्यते। तदुक्तं वार्तिककृता— "[२]अपरायत्तबोधे हि निदिध्यासनमुच्यते" इति। अथवाऽक्रिय-ब्रह्मात्मत्वानुभवे सति प्रमातृत्वानुपपत्तौ पुनर्ज्ञानासंभवात्[३]सद्योमुक्तिकारणं सकृद्विज्ञानं प्रतिबोध उच्यते।

"[४]सकृत्प्रवृत्त्या, मृद्नाति क्रियाकारकरूपभृत्।
अज्ञानमागमज्ञानं [५]सांगत्यं नास्त्यतोऽनयोः"

इति। पक्षद्वयेऽप्यरुचिमाह—निर्निमित्त इति। अयमाशयः—नतावद[६]विद्यानिवर्तकस्याऽऽगन्तुकस्य बोधस्य निर्निमित्तत्वं संभवति। कार्यस्य सनिमित्तत्वव्याप्तेः। सौषुप्तस्यापि न निर्निमित्तत्वम[७]विद्यायाः पूर्वपूर्वनिरोधावस्थासंस्कारोद्भूततादृशवृत्त्यभिव्यक्तचैतन्यस्य तत्र सुखसाक्षात्कारत्वोपगमात्। [८]अत एव वृत्तिविशिष्टस्य [९]विनाशे स्मरणमु[१०]पपद्यते। [११]अत्रापि तर्ह्या[१२]वृत्तिसंस्कारप्रचयान्निवृत्तेऽपि चित्ते ब्रह्माभिव्यक्तं स्यादिति चेन्न। [१३]तथा सत्य[१४]प्रमात्वेन विनष्टपुत्रा[१५]परोक्षादिवाविद्यानिवृत्तिर्न स्यात्। शाब्दज्ञानसंवादात्प्रमात्वे [१६]परतन्त्रत्वप्रसङ्गः, [१७]शब्दमूलत्वात्प्रमात्वे न निर्निमित्ततेति। [१८]प्रवृत्तफल-कर्मप्रतिबन्धाद्वर्तमानप्रमातृन्वाभासनिवृत्तेरसकृद्बोधोऽपि संभवतीति पक्षद्वयेऽपि नाऽऽदरः। सर्वथाऽपि

---

प्रतिबोध शब्द से करते हैं। दूसरे लोग (मोक्ष के कारण स्वरूप उत्पन्न हुए) सम्यक् विज्ञान को प्रतिबोध कहते हैं। ऐसे लोग कुछ भी मानें, विना निमित्त के अथवा निमित्त से, एक बार अथवा अनेक

---

१. निवृत्ते चेतोव्यापारे इति–व्यापारो वृत्तिस्तथा च निर्वृत्तिकस्य चेतसः संस्कारमात्रात्मनाऽवस्थितावित्यर्थः। २. उक्तबोधस्य निर्निमित्तत्वे प्रमाणमाह—अपरायत्तेति। वृत्त्यावरणभङ्गे निरावरणस्वरूपप्रकाशस्य प्रकाशान्तरनिरपेक्षत्वादपरायत्तत्व-मिति सिद्धान्तगतिः। वार्तिकेऽपि वा पूर्वपक्षतयैकदेशिमतोद्भावनमेवैतदिति मन्तव्यम्। एवमग्रेऽपि। ३. सद्योमुक्तीति—मुक्तिरत्र विदेहकैवल्यम्। ४. यथोक्तप्रतिबोधेऽपि वार्तिकमानयति—सकृदित्यादि। अत्र मृद्नातीत्यस्य मिथ्यापयतीति सिद्धान्तानुसार्यर्थः। मिथ्यापयति-मिथ्याकरोति। ५. सांगत्यं—सामानाधिकरण्यमित्यर्थः। ६. बोधस्यागन्तुकत्वे हेतुगर्भं विशेषणमविद्यानिवर्तकस्येति। अनागन्तुकत्वेऽनादित्वेनाविद्यावस्थित्यसंभवादिति भावः। ७. अविद्याया इति—अस्य वृत्तावन्वयस्तथाहि मनः प्रभृतीनां यः पूर्वः पूर्वो निरोधः सुषुप्तिकालीनोऽविद्यायां लयस्तादृशनिरोधावस्थाया यो विद्यायां संस्कारस्तस्मान्निमित्तादविद्याया या निद्राख्या निरोधवृत्तिस्तदभिव्यक्तेत्यर्थः। निद्राया वृत्तित्वं तूक्तं योगसूत्रे—अभावप्रत्ययालम्बनावृत्तिर्निद्रेति। अभावो जाग्रत्स्वप्नवृत्तीनां तद्धेतुस्तमस्तदालम्बनेत्यर्थः। ८. अत एवेति—यथोक्तवृत्तिनिमित्तकत्वादिति यावत्। ९. विनाश इत्यादि—स्मृतिहेतुसंस्कारस्यानुभवनाशाधीनत्वादिति भावः। १०. उपपद्यत इति—न चैतत्सौषुप्तबोधस्य निर्निमित्तचिन्मात्रत्वोपगमे घटत इति भावः। ११. अत्रापि— असंप्रज्ञातसमाधावपीत्यर्थः। १२. आवृत्तिसंस्कारप्रचयादिति—संप्रज्ञातसमाधिसंस्कारातिशयादिति यावत्। १३. तथा सतीति— प्रमाणोत्थवृत्ति विनैव ब्रह्मत्ताभिव्यक्त्यभ्युपगमे सतीत्यर्थः। १४. अप्रमात्वेनेति—संस्कारप्रचयजन्याया ब्रह्माभिव्यक्तेरिति शेषः। १५. अपरोक्षादिव तस्या इति शेषः। १६. परतन्त्रत्वप्रसङ्ग इति—प्रमात्वस्य परतस्त्वप्रसङ्गः स च मीमांसकसमयविरुद्ध इत्यर्थः। १७. तस्मात्समाधावपि साक्षात्कारस्य प्रमात्वाय शब्दमूलावृत्तिरेव संस्कारमात्रावशेषा ब्रह्माकाराऽभ्युपेया न सा निर्निमित्ता शब्दजत्वादित्याशयेनाह—शब्दमूलत्वात्प्रमात्व इति। १८. सकृद्बोधपक्षं प्रतिक्षिपन्नाह—प्रवृत्तफलकर्मेति। प्रारब्धकर्मेत्यर्थः।

**विरोधात्। धीराः धीमन्तो विवेकिनो विनिवृत्तबाह्यविषयाभिलाषाः। प्रेत्य मृत्वाऽस्माल-लोकाच्छरीराद्यनात्मलक्षणाद्व्यावृतममत्वाहंकाराः सन्त इत्यर्थः। अमृता अमरणधर्माणो नित्यविज्ञानामृतत्वस्वभावा एव भवन्ति ।।१३।।५।।**

**इति द्वितीयः खण्डः ।।२।।**

**ब्रह्म ह देवेभ्य इति ब्रह्मणो दुर्विज्ञेयतोक्तिर्यत्नाधिक्यार्थां। समाप्ता ब्रह्मविद्या यदधीनः पुरुषार्थः। अतः ऊर्ध्वमर्थवादेन ब्रह्मणो दुर्विज्ञेयतोच्यते। तद्विज्ञाने कथं नु नाम यत्नमधिकं कुर्यादिति। शमाद्यर्थो वाऽऽम्नायोऽभिमानशातनात्। शमादि वा ब्रह्मविद्यासाधनं विधित्सितं तदर्थोऽयमर्थवादाम्नायः। न हि शमादिसाधनरहितस्याभिमानरागद्वेषादियुक्तस्य ब्रह्मविज्ञाने सामर्थ्यमस्ति। [1]व्यावृत्तबाह्यमिथ्याप्रत्ययग्रा-**

---

**एकस्मिन्निरंशे चिन्मात्रे चयनस्योर्ध्वाधोदेशनिवेशनस्येष्टकानामिवासंभवादित्यर्थः ।।१३।।५।।**

**इति द्वितीयः खण्डः ।।२।।**

**"[2]यः सुराणां जये हेतुरसुराणां पराजये।**

**सत्त्वप्रधानया शक्त्या [3]संपन्नः सोऽहमीश्वरः" इति**

**ब्रह्म हेत्याद्याख्यायिकायास्तात्पर्यं संगृहीतं विवृणोति**—समाप्तेत्यादिना। **तात्पर्यान्तरमाह**—शमाद्यर्थो वेति। **संग्रहवाक्यं विवृणोति**—शमादि वेति। **अभिप्रायान्तरमाख्यायिकायाः संगृह्णाति**—सगुणेति। **संगृहीतं**

---

हो जाता है) जिसकी बाह्य विषयों से अभिलाषा छूट गयी है, उसे धीर पुरुष कहते हैं, वह इस शरीरादि अनात्म लोक से अहंता-ममता को त्याग कर अमरणधर्मा अर्थात् नित्य विज्ञान अमृत स्वभाव वाले ही हो जाते हैं। धातुओं के अनेक अर्थ हैं। इसीलिये यहाँ पर विचित्य क्रिया का चयन करके ऐसा अर्थ नहीं किया गया, क्योंकि आत्मा के सम्बन्ध में ऐसा अर्थ करने से विरोध आता है।

।। इति द्वितीय खण्डः ।।

## ।। अथ तृतीय खण्डः ।।

**"ब्रह्म ह देवेभ्यः"** इत्यादि आख्यायिकापरक वाक्य से ब्रह्म की दुर्विज्ञेयता इसलिये बतलायी गयी है कि ब्रह्म जिज्ञासु उसकी प्राप्ति के लिये अधिक प्रयत्न करे जिसके अधीन परम पुरुषार्थ है। वह विद्या समाप्त कर दी गयी। अब इसके आगे अर्थवाद द्वारा ब्रह्म की दुर्विज्ञेयता कही जाती है। ऐसी स्थिति में उसके विज्ञान के लिये मनुष्य अधिक प्रयत्न किसी भी प्रकार से करे।

अथवा यह आख्यायिका रूप आगम अभिमाननाशक होने के कारण शम आदि की प्राप्ति के लिये हो सकता है या इससे ब्रह्मविद्या के साधन शमादि को बतलाना अभीष्ट है। इसीलिये यह अर्थवाद आगम है। क्योंकि जो साधक शमादि साधनों से शून्य तथा अभिमान रागादि से युक्त है, उसका

---

१. व्यावृत्तेत्यादि—व्यवृत्ता निवृत्ता बाह्यगोचरा मिथ्याप्रत्यया देहादिगोचराभिमानादिरूपा यस्य तेनैवाधिकारिणा साक्षात्कर्तुं शक्यत्वाद्-ब्रह्मण इत्यर्थः। २. भाष्यसंगृहीतमाख्यायिकातात्पर्यं स्वयं ग्रथ्नन्नाह—य इत्यादिना। ३. संपन्नो विशिष्टः।

**सनिमित्तः सकृद्वाऽसकृद्वा प्रतिबोध एव हि सः। अमृतत्वममरणभावं स्वात्मन्यवस्थानं मोक्षं हि यस्माद्विन्दते लभते यथोक्तात्प्रतिबोधात्प्रतिबोधविदितात्मकात्तस्मात्प्रतिबोधविदितमेव मतमित्यभिप्रायः। बोधस्य हि प्रत्यगात्माऽऽत्मविषयं च मतममृतत्वे हेतुः। न ह्यात्मनो [१]ऽनात्मत्वममृतत्वं भवत्यात्मत्वादात्मनोऽमृतत्वं निर्निमित्तमेव। एवं मर्त्यत्वमात्मनो यदविद्ययाऽनात्मत्वप्रतिपत्तिः। [२]कथं पुन[३]र्यथोक्तयाऽऽत्मविद्ययाऽमृतत्वं विन्दत आह-आत्मना स्वेन स्वरूपेण विन्दते लभते वीर्यं बलं सामर्थ्यं [४]धनसहायमन्त्रौषधितपोयोगकृतं वीर्यं मृत्यु न शक्नोत्यभिभवितुमनित्यवस्तुकृतत्वात्। [५]आत्मविद्याकृतं तु**

---

**परमात्मा प्रतिबोध एव बोधं प्रति बोधं प्रति साक्षितया भातीति। लक्ष्यपदार्थविवेचनपूर्वकं महावाक्योत्थं परमात्माऽस्मीति ज्ञानमेव सम्यग्ज्ञानं यस्मात्तत एवामृतत्वं लभत इत्याह**—अमृतत्वमिति। **उक्तमर्थं संक्षिप्याऽऽह**—बोधस्य हीति। **बुद्धिपरिणामस्य सर्वस्य भासकं प्रत्यक्चैतन्यं परमात्मा न भवति किंतु ब्रह्माण्डाद्बहिः स्थितस्तत्प्राप्तिश्च मोक्ष• इत्याशङ्क्याऽऽह**—न हीति। **अनात्मप्राप्तेः कर्मफलवदनित्यत्वेनामृतत्वप्रसिद्धिर्न स्यादित्यर्थः। यद्युक्तदोषपरिहारायौपाधिकभेदेन भिन्नत्वं ब्रह्मणः स्वतस्त्वात्मत्वमेवेति मन्यसे तत्राऽऽह**—आत्मत्वादिति। **ब्रह्मण आत्मत्वादेवाऽऽत्मनोऽमृतत्वं [६]स्वभावत एव सिद्धम्। तर्हि विद्याया आनर्थक्यं प्राप्तमित्याशङ्क्याऽऽह**—एवं मर्त्यत्वमिति। **अविद्यया देहाद्यात्मत्वप्रतिपत्तिरिति यत्तदात्मनो मर्त्यत्वं तन्निवृत्तिर्विद्याफलमित्यर्थः। [७]वीर्यं विद्याकृतमुक्तं मुक्तत्वे**

---

बार वह सभी प्रतिबोध ही तो है। (हमें इस विवेचन से कोई मतलब नहीं) क्योंकि पूर्वोक्त प्रतिबोध से मुमुक्षु आत्मा में अवस्थिति रूप अमरत्व को प्राप्त करता है। इसलिये वह ब्रह्म प्रत्येक बोध में अनुभव होने वाला ही माना गया है। यही इसका अभिप्राय है। अमरत्व की प्राप्ति में प्रत्यगात्मविषयक बोध को ही कारण माना गया है। आत्मा की अनात्मरूपता उसके मोक्ष का कारण हो नहीं सकती किन्तु आत्मा का अमरत्व उसका स्वरूप होने के कारण निर्निमित्त सदा सिद्ध ही है। ऐसे ही आत्मा में मरणधर्मत्व अविद्या के कारण अनात्म धर्म की कल्पना ही है।

तो भला पूर्वोक्त आत्मज्ञान से कैसे अमरत्व प्राप्त करता है? इस पर कहते हैं, अपने स्वरूप के ज्ञान से अमरत्व प्राप्ति का सामर्थ्य मुमुक्षु पुरुष प्राप्त कर लेता है क्योंकि धन, सहाय, मन्त्र, औषधि, तप और योग से प्राप्त होने वाला सामर्थ्य अनित्य वस्तु जन्य होने के कारण मृत्यु का पराभव नहीं कर सकता है। इसके विपरीत आत्मविद्या से प्राप्त सामर्थ्य आत्मा से ही प्राप्त होता है, अन्य

---

१. अनात्मत्वं अनात्मप्राप्तिः। २. कथं पुनरित्यादि—न हि मृत्युममारयित्वाऽमृतत्वं नाम सुलभं न चान्तरेण तादृशं बलं मारणं मृत्योरित्याशयः। ३. यथोक्तयाऽऽत्मविद्ययेति—मृत्स्वतिक्रमणमन्तरेणामृतत्वलाभायोगादविद्यया मृत्युं तीर्त्वेति श्रुतेर्मृत्युतरणौपयिकबलमविद्यया संपाद्यैव विद्ययाऽमृतत्वं विन्देतेति भवितव्यं समुच्चयेनेति गूढाभिसन्धिः ४. मुख्यामृतत्वलाभानुकूलमृत्व्वभिभवौपयिकबलाय नाविद्याऽनुसर्तव्या तस्यास्तत्राऽसामर्थ्यादित्याशयेनाह—धनसहायमन्त्रेति ५. आत्मविद्याकृतं तु वीर्यमात्मनैव विन्दत इति—यथा ब्राह्मणत्वादिविज्ञानकृते साधनानुष्ठानादिसामर्थ्ये विज्ञातं ब्राह्मणत्वाद्येव हेतुर्भवति विज्ञानं तत्र द्वारमात्रं यथा वौषधसेवनकृते सामर्थ्ये सेवाद्वारौषधमेव हेतुस्तद्वदिति भावः। ६. स्वभावत एव सिद्धमिति—तथा च कृतकत्वाभावेन नित्यवान्मुखत्वमेवामृतत्वस्येति भावः। ७. वीर्यं विद्याकृतमुक्तं मुक्तत्वे दार्ढ्यमिति-मुक्तीभवने दृढीभाव एवं विद्याकृतं वीर्यमुक्तमित्यन्वयः।

ह्यत्वाद्ब्रह्मणः। यस्माच्चाग्न्यादीनां जयाभिमानं शातयति। ततश्च ब्रह्मविज्ञानं दर्शयत्यभिमानोपशमे। तस्माच्छमादिसाधनविधानार्थोऽयमर्थवाद इत्यवसीयते। सगुणोपासनार्थो वाऽपोदितत्वात्। नेदं यदिदमुपासत इत्युपास्यत्वं ब्रह्मणो-ऽपोदितमपोदितत्वादनुपास्यत्वे प्राप्ते तस्यैव ब्रह्मणः सगुणत्वेनाधिदैवमध्यात्मं चोपासनं विधातव्यमित्येवमर्थो वेत्यधिदैवतं तद्वनमित्युपासितव्यमिति हि वक्ष्यति। ब्रह्मेति परो लिङ्गात्। नह्यन्यत्र परादीश्वरान्नित्यसर्वज्ञात्परिभूयाग्न्यादींस्तृणं वज्रीकर्तुं सामर्थ्यमस्ति तन्न शशाक दग्धुमित्यादिलिङ्गाद्ब्रह्मशब्दवाच्य ईश्वर इत्यवसीयते। नह्यन्यथा-ऽग्निस्तृणं दग्धुं नोत्सहते वायुर्वाऽऽदातुम्। ईश्वरेच्छया तृणमपि वज्रो भवतीत्युपपद्यते। तत्सिद्धिर्जगतो नियतप्रवृत्तेः। श्रुतिस्मृतिप्रसिद्धिभिर्नित्यसर्वविज्ञान ईश्वरे सर्वात्मनि

---

विवृणोति— नेदमित्यादिना। **कृत्स्नाख्यायिकायास्तात्पर्यमुक्त्वा ब्रह्मशब्दार्थमाह**—ब्रह्मेति परो लिङ्गा-दिति। **एतद्व्याख्याति—नह्यन्यत्रेत्यादिना। कथं तर्हीश्वरसिद्धिरित्याकाङ्क्षायामाह**— तत्सिद्धिरिति। **ननु श्रुत्यादिभिरेवेश्वरे सिद्धे किमिति जगतो नियतप्रवृत्तिलिङ्गका[1]नुमानं सूत्रितं तत्राह**— श्रुतिस्मृतिप्रसिद्धिभिरिति। **यावत्तर्केण संभवो [2]नानुगृह्यते तावच्छास्त्रप्रतिपन्नोऽपीश्वरो न निश्चीयते-**

---

ब्रह्मविज्ञान में सामर्थ्य नहीं हो सकता। बाह्य मिथ्या प्रतीतियों के ह्रास द्वारा ही ब्रह्म का ग्रहण हो सकता है। इस आख्यान में बतलाया गया है कि देवताओं को विजय सम्बन्धी अभिमान जब नष्ट होता है तत्पश्चात् ही ब्रह्मविज्ञान प्राप्त होता है। तात्पर्य यह कि शमादि साधनों के विधान के लिये ही यह अर्थवादरूप आगम है।

अथवा पहले ब्रह्म में उपास्यत्व का निषेध कर चुके हैं **"नेदं यदिदमुपासते"** इत्यादि श्रुति द्वारा ब्रह्म में उपास्यत्व का निषेध कर चुके हैं। पूर्व से उसका सम्बन्ध है। इस प्रकार ब्रह्म में निषेध हो जाने पर ब्रह्म में अनुपास्यता आ जाती है। अतः सगुण रूप से ब्रह्म की अधिदैव या अध्यात्म उपासना का विधान करने के लिये यह आख्यायिका हो सकती है। ऐसा ही **"तद्वनमित्युपासितव्यम्"** इस मन्त्र द्वारा ब्रह्म के अधिदैवत रूप से उपासना का वर्णन करेंगे।

ब्रह्म शब्द परमात्मा अर्थ समझना चाहिये, क्योंकि इस अर्थ का सूचक चिह्न यहाँ पर विद्यमान् है। नित्य सर्वज्ञ परमेश्वर से भिन्न किसी में भी अग्नि आदि देवताओं का पराभव कर तिनके को वज्र बनाने की शक्ति नहीं हो सकती। अतः "उसे अग्नि नहीं जला सका" इत्यादि लिंग से ब्रह्म शब्द का वाच्य अर्थ ईश्वर है, ऐसा निश्चित होता है। इसके अतिरिक्त किसी भी कारण से अग्नि तृण को जलाने में और वायु उस तिनके को उड़ाने में सामर्थ्यहीन नहीं हो सकते थे। हाँ यह बात अवश्य है कि ईश्वर की इच्छा से तृण भी वज्र हो जाता है। इस प्रकार उस ईश्वर की सिद्धि संसार की नियमित प्रवृत्ति से हो जाती है। यद्यपि श्रुति, स्मृति और प्रसिद्धि से नित्य सर्व विज्ञान स्वरूप

---

१. अनुमानमिति—सूर्यादिजगत् सनियन्तृकं नियतप्रवृत्तिकत्वाद् भृत्यादिवदित्येवं रूपमित्यर्थः। भाष्ये तु सविस्तरं वक्ष्यते। २. नानुगृह्यत इति—नानुभाव्यत इत्यर्थः।

**इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः**
**भूतेषु भूतेषु विचित्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति।।१३।।५।।**

**इति द्वितीयः खण्डः ।।२।।**

यदि इस मनुष्य जन्म में ब्रह्म को जान लिया, तब तो ठीक है और यदि उसे इस मनुष्य जन्म रहते-रहते नहीं जाना तो बड़ी भारी क्षति होगी। अतः बुद्धिमान् पुरुष समस्त प्राणियों में उस ब्रह्मतत्त्व को प्रत्यक्ष अनुभव करके इस लोक में जाकर (अद्वैतभाव रूप से) अमर हो जाते हैं (अर्थात् ब्रह्म ही हो जाते है) ।।५।।

।। इति द्वितीयः खण्डः ।।

---

**वीर्यमात्मनैव विन्दते नान्येनेत्यतोऽनन्यसाधनत्वादात्मविद्यावीर्यस्य [1]तदेव वीर्यं मृत्युं शक्नोत्यभिभवितुम्। यत एवमात्मविद्याकृतं वीर्यमात्मनैव विन्दते[2]ऽतो विद्ययाऽऽत्मविषयया विन्दतेऽमृतम्, "[3]नायमात्मा बलहीनेन लभ्यः" इत्याथर्वणे। [4]अतः समर्थो हेतुः, अमृतत्वं हि विन्दत इति।।१२।।४।।**

**कष्टा खलु सुरनरतिर्यक्प्रेतादिषु संसारदुःखबहुलेषु [5]प्राणिनिकायेषु जन्मजरा-**

---

**दार्ढ्यं [6]तच्च स्वाभाविकमेव मुक्तत्वं वास्तवं सर्वशरीराद्यसंसर्गित्वान्नभोवन्निरवयवत्वादेव। ततश्च नित्यमुक्त एवाहमित्य[7]वष्टम्भो विद्याकृतं बलमित्यर्थः।।१२।।४।।**

**उत्तरवाक्यस्यापेक्षितमर्थमाह — कष्टा खल्विति। [8]लौकिकमपि [9]सत्यम् चिरं जीवनं**

---

किसी से नहीं। अतः आत्मविद्या जनित सामर्थ्य किसी अन्य साधन से न प्राप्त होने के कारण मृत्यु का पराभव कर सकता है। क्योंकि इस प्रकार आत्मविद्या जनित सामर्थ्य को मुमुक्ष जन आत्मा द्वारा ही पाता है। अतः आत्म विषयक विद्या से ही अमरत्व प्राप्त होता है। ऐसा ही अथर्ववेदीय उपनिषत् में भी कहा है—"यह आत्मा बलहीन पुरुष से प्राप्त होने योग्य नहीं"। अतः मृत्यु के पराभव में आत्मविद्या समर्थ कारण है क्योंकि इससे मोक्ष प्राप्त करता है।।४।।

---

१. तदेव वीर्यमित्यादि—मृत्योराविद्यकत्वात् तदुक्तं मर्त्यत्वमात्मनो यदविद्ययेत्यादि। नित्यमुक्त एवाहमस्मीति दृढावष्टम्भात्मके च वीर्ये सत्यविद्यानवस्थानात्सुकरो वीर्येण यथोक्तेन मृत्योरभिभव इति भावः। २. अत इति—अमृतत्वौपयिकमृत्युतरणानुकूलवीर्योत्पादने विद्यायाः सहकार्यन्तरानपेक्षत्वादिति यावत्। ३. विद्याऽप्यामृतवे मृत्य्वभिभावकवीर्यापेक्षायां श्रुत्यन्तरं संवादयन्नाह—नायमिति। ४. अतः समर्थो हेतुरति— मृत्य्वभिभावकबलस्य विद्ययैव लभ्यत्वात्प्रतिबोधविदितस्य मतत्वसाधको हेतुः सूपपन्न इत्यर्थः। ५. प्राणिनिकायेष्विति—प्राण्यन्तर्गतसुरादिसजातीयानां समूहेष्वित्यर्थः। सधर्मिणां समुदायो निकाय इत्यमरः। ६. तस्य स्वरूपमाह—तच्चेत्यादि। तच्च विद्याकृतं बलं स्वाभाविकमेवेत्याद्याकारोऽवष्टम्भ एवेत्यन्वयः। ७. अवष्टम्भो निगाढप्रत्ययः। नभोवन्निरवयवत्त्वादात्मनः सर्वशरीराद्यसंसर्गित्वं ततोऽसंसर्गित्वादिस्वभावप्रयुक्तत्वात्स्वाभाविकमेवात्मनो मुक्तत्वं वास्तवमिति काल्पनिकबन्धोपपत्तये। अत्र यथोक्तावष्टम्भस्यासंसर्गित्वाद्यात्मस्वभावप्रयुक्तत्वाभिधानादात्मना विन्दत इति सूपपादितं भवतीति ध्येयम्। ८. लौकिकमपि सत्यं तस्य भवतीत्यपिरयमनास्थायाम्। ९. सत्यमिति—स्पृहार्हं फलमुच्यते।

**सर्वशक्तौ सिद्धेऽपि शास्त्रार्थनिश्चयार्थमुच्यते। तस्येश्वरस्य सद्भावसिद्धिः कुतो भवतीत्युच्यते। यदिदं जगद्देवगन्धर्वयक्षरक्षःपितृपिशाचादिलक्षणं द्युवियत्पृथिव्यादित्यचन्द्रग्रहनक्षत्र-विचित्रं विविधप्राण्युपभोगयोग्यस्थानसाधनसंबन्धि तदत्यन्तकुशलशिल्पिभिरपि दुर्निर्माणं देशकालनिमित्तानुरूपनियतप्रवृत्तिनिवृत्तिक्रममेतद्भोक्तृकर्मविभागज्ञप्रयत्नपूर्वकं**

---

[1]ऽर्थवादत्वशङ्काप्रतिबन्धादतः शास्त्रार्थस्येश्वरस्य निश्चयाय [2]नियमाय [3]सामान्यतो दृष्टमनुमानं [4]शास्त्रानु-ग्राहकरूपं सूत्रेणोच्यते। एतद्व्याख्याति—तस्येश्वरस्येत्यादिना [5]अनादि[6]प्रसिद्धकर्तृव्यतिरिक्तं [7] जगद्ध-र्मीकृत्य यद्यपीश्वरः सिषाधयिषित[8]स्तथापि जगतो बहूनि विशेषणानि संसारिविलक्षणकर्तृ संभावनाय, नैयायिकास्तु व्याप्यस्य पक्षधर्मताबलाद्व्यापकविशेषः पक्षधर्मः सिध्यति ततः [9]स्वतन्त्रमनुमानमीश्वर-निश्चायकमाहुः। तद्[10]दूषणं [11]प्रकटार्थे द्रष्टव्यम्। सामान्यतो दृष्टं रचयति। एतज्जगद्भोक्तॄणां कर्मणां च विभागं यो जानाति तत्पूर्वकं भवितुमर्हतीति प्रतिज्ञा। अत्र जगन्निमित्तदृष्टनिष्पत्त्यर्थो यो जीवानां प्रयत्नस्तत्पूर्वकत्वं जगतः सिद्धमिति सिद्धसाधनत्वं वदतां[12]निरीश्वरवादिनां निरासाय विशेषणं भोक्तृकर्मविभागज्ञेति। न हि जीवानामेते भोक्तारोऽस्मिन्देशे काले वाऽस्य कर्मफलस्येति विभागज्ञानं

---

सर्वात्मा सर्वशक्तिमान् ईश्वर सिद्ध हो जाता है तथापि शास्त्रार्थ निश्चय करने के लिये यहाँ पर यह अनुमान कहा गया है तो फिर भला उस ईश्वर के सद्भाव की सिद्धि कैसे होती है? इस पर बतलाते हैं। स्वर्ग, आकाश, पृथिवी, आदित्य, चन्द्रमा, ग्रह और नक्षत्रों के कारण विचित्र भासने वाला तथा नाना प्रकार के प्राणियों के उपभोग योग्य स्थान और साधनों से सम्बन्धित जो भी यह देवता, गन्धर्व, यक्ष, राक्षस, पितृगण और पिशाचादिरूप जगत् है, वह जगत् अत्यन्त कुशल कलाकारों द्वारा भी निमार्ण किया जाना कठिन है। अतः यह देश, काल और निमित्त के अनुरूप नियमित प्रवृत्ति—निवृत्ति

---

१. अर्थवादत्वशङ्केति—ईश्वरविषयं शास्त्रं कर्मैवेश्वरत्वेन स्तौतीति शङ्केत्यर्थः। २. नियमायेति—अयमेव शास्त्रार्थ इत्येवम्। ३. सामान्यतो दृष्टमनुमानमिति—सामान्यतः कैवल्यपरिहारेणोभयविशिष्टतया दृष्टत्वात् सामान्यतो दृष्टमित्यन्वयव्यतिरेक्युच्यते। इति तार्किकरक्षा-टीकाकृतः। लक्षणान्तरं तत्रैव मूलोक्तं—दृष्टं सामान्यतो दृष्टमिति चास्य विधाद्वयं पूर्वं प्रत्यक्षयोग्यार्थं तदयोग्यार्थमुत्तरमिति विशेषतो दृष्टं सामान्यतो दृष्टमिति च द्विविधमनुमानं भवति तत्र प्रत्यक्षं योग्यार्थानुमापकं विशेषतो दृष्टं यथा धूमादिः नित्यातीन्द्रियार्थानुमापकं सामान्यतो दृष्टं यथा चक्षुराद्यनुमापकं रूपादिज्ञानमिति तत्र मूलकृद्व्याख्या। ४. शास्त्रानुग्राहकरूपमिति—शास्त्रोक्तार्थ- संभावकरूपमित्यर्थः। ५. ननु जगत् सकर्तृकं कार्यत्वाद्घटादिवदित्येतावतैवेश्वरसिद्धिः संभवति। न च पृथिव्यादिजन्माप्रसिद्धेस्तत्र हेत्वसिद्धिः शङ्क्यागुणक्रिया-दिमत्त्वेन भङ्गादिविकारदर्शनेन वासावयवत्त्वेन वा कार्यत्वानुमानात्। न च जीव एव कश्चित् कर्ता स्यात्तथा चार्थान्तरत्वं तस्याप्रसिद्धत्वात् स हि प्रसिध्यत्येव कुलालादिस्तत् किमर्थमियान् वागाडम्बरस्तन्यत इत्याशङ्क्याऽऽह—अनादीति। अनादिव्यतिरिक्तमनादिभिन्नं सादीति यावत्। ६. प्रसिद्धकर्तृव्यतिरिक्तम्—अप्रसिद्धकर्तृकमित्यर्थः। ७. ईदृशं जगद्धर्मीकृत्य—पक्षीकृत्य यद्यपीश्वरः सिषाधयिषित इति शङ्कानुवादः। ८. उत्तरमाह—तथापीति। अजीवोऽपि भोगादिमत्तया संसार्येव भवेदीश्वर इति मा शङ्कीति बहूनि विशेषणानीत्यर्थः। नह्येवंविधकार्यकर्तृत्वं संसारिणो दृष्टमिति नासौ संसारी इति भावः। ९. स्वतन्त्रमिति—शास्त्रनिरपेक्षमेवानुमानं प्रमाणं न तु शास्त्रानुग्राहकमित्यर्थः। १०. दूषणं- खण्डनम्। ११. प्रकटार्थे तदाख्ये ग्रन्थे। १२. निरीश्वरवादिनामिति—मीमांसकादीनामित्यर्थः।

मरणरोगादिसंप्राप्ति[1]रज्ञानादत इहैव चेन्मनुष्योऽधिकृतः समर्थः सन्यद्यवेदीदात्मानं[2]यथोक्तलक्षणं विदितवा[3]न्यथोक्तेन प्रकारेण। अथ तदास्ति सत्यं मनुष्यजन्मन्यस्मिन्नविनाशोऽर्थवत्ता वा सद्भावो वा परमार्थता वा सत्यं विद्यते। न चेदिहावेदीदिति। न चेदिह जीवंश्चेदधिकृतोऽवेदीन्न विदितवांस्तदा महती दीर्घाऽनन्ता विनष्टिर्विनाशनं जन्मजरामरणादिप्रबन्धाविच्छेदलक्षणा संसारगतिस्तस्मादेवं [4]गुणदोषौ विजानन्तो [5]ब्राह्मणा भूतेषु भूतेषु सर्वभूतेषु स्थावरेषु चरेषु चैकमात्मतत्त्वं ब्रह्म विचित्य विज्ञाय साक्षात्कृत्य धीरा धीमन्तः प्रेत्य व्यावृत्य ममाहंभाव-लक्षणादविद्यारूपादस्माल्लोकादुपरम्य सर्वात्मैकत्वभावमद्वैतमापन्नाः सन्तोऽमृता भवन्ति इत्यर्थः। "स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवति" इति श्रुतेः ।।१३।।५।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवत्पादकृतौ केनो-पनिषत्पदभाष्ये द्वितीयः खण्डः ।।२।।

---

धनवत्त्वम्। सद्भावः साधुभावः ख्यातिः। एतदपि सर्वं ब्रह्मविदो भवतीति स्तुत्यर्थमुच्यते। परमार्थतो ब्रह्मरूपस्थितिस्तु फलमवश्यं भवतीत्यर्थः ।।१३।।५।।

इति द्वितीयः खण्डः ।।२।।

---

## आत्मविद्या ही सार है

जिसमें सांसारिक दुःखों का बाहुल्य है, उन देवता, मनुष्य, तिर्यक् और प्रेतादि प्राणी समुदाय में अज्ञान के वशीभूत जन्म, जरा, मरण, रोगादि की प्राप्ति निःसन्देह अत्यन्त दुःख की बात है। अतः यदि किसी अधिकारी पुरुष ने इस लोक में ही पूर्वोक्त लक्षणों से युक्त आत्मा को पूर्वोक्त प्रकार से जान लिया तो उसके इस मनुष्य जन्म में सत्य अर्थात् परमार्थता विद्यमान है और यदि इस लोक में जीवित रहता हुआ भी उस अधिकारी ने आत्मज्ञान प्राप्त नहीं किया तो उसे (जन्म, जरा, मरणादि परम्परा का विच्छेद न होना रूप) संसार गति की प्राप्ति अवश्य होगी, जो बड़ी भारी विनष्टि है। अतः इस प्रकार गुण और दोष को जानने वाले ब्रह्मण लोग चराचर सभी प्राणियों में एक ब्रह्मस्वरूप आत्मतत्त्व को साक्षात्कार कर ममता-अहंतारूप इस अविद्यास्वरूप लोक से ऊपर उठकर सब में आत्मैकत्वरूप अद्वयभाव को प्राप्त होकर अमर हो जाते हैं अर्थात् ब्रह्म ही हो जाते हैं। ऐसा ही "जो पुरुष निश्चय पूर्वक उस परब्रह्म को जानता है, वह ब्रह्म ही हो जाता है" इस श्रुति से भी सिद्ध होता है।।५।।

।। इति द्वितीय खण्ड ।।

---

१. अज्ञानादिति—न चेदिहावेदीन्महती विनष्टिरिति श्रुतेरिति भावः। २. यथोक्तलक्षणं श्रोत्रस्य श्रोत्रमित्यादिनोक्तरूपमित्यर्थः। ३. यथोक्तेनेति—अन्यदेव तद्विदितादित्येवमादिरूपेणेत्यर्थः। ४. गुणदोषौ—वेदनावेदनयोरित्यादिः। ५. ब्राह्मणा इति—पूर्वं मनुष्योऽधिकृत इति सामान्यमुक्त्वा सम्प्रति ब्राह्मणा इति विशेषं ब्रुवन् तेषु वेदनभारं निक्षिपति। अयमाशयः—ब्राह्मणेतरोऽपि संश्चेदवेदीद्धन्यो चेन्नास्ति बलवती घृणा ब्राह्मणश्चेदवेदीन्न तावद्बहुमानो न चेन्महती घृणेत्यवश्यं वेदितव्यं ब्राह्मणेनेति।

भवितुमर्हति। कार्यत्वे सति यथोक्तलक्षणत्वात्। गृहप्रासादरथशयनासनादिवद्विपक्ष आत्मादिवत्। कर्मण एवेति चेत्। न, परतन्त्रस्य निमित्तमात्रत्वात्। यदिदमुपभोग-वैचित्र्यं प्राणिनां तत्साधनवैचित्र्यं च देशकालनिमित्तानुरूपनियतप्रवृत्तिनिवृत्तिक्रमं च

---

संभवति। विशेषानभिज्ञत्वादित्यर्थः। यथोक्तलक्षणत्वादिति। [1]विचित्रत्वादित्युक्ते व्यभिचारः स्यात्। [2]आत्मादिस्वभाववैचित्र्यस्य प्रयत्नपूर्वकत्वाभावात्तदर्थं कायत्वे सतीति विशेषणम्। कार्यत्वादित्युक्तेऽ[3]बुद्धिपूर्वकारिकार्ये विभागज्ञप्रयत्नपूर्वकत्वं नास्तीत्यनैकान्तिकत्वं स्यात्तदर्थं यथोक्तलक्षणत्वादिति। यद्विचित्रं तद्विभागज्ञप्रयत्नपूर्वकं यथा गृहादि जानात्येव हि तक्षादिरयं गृहादिरस्य स्वामिनो द्रव्यदानादिपूर्वकं वाऽस्य निर्माणमित्थं चेति ततो न साध्यवैकल्यं [4]यथाशब्दं हि साधनदूषणे। [5]नाभिप्रायवशात्। विपक्षे व्यतिरेक आत्मादिवदित्युदाहरणम्। यद्विभागज्ञप्रयत्नपूर्वकं न भवति तद्विशिष्टकार्यमपि न भवति। यथाऽऽत्मा[6]काशादीत्यन्वयव्यतिरेकप्रयोगइत्यर्थः। विचित्रकार्यत्वमस्तु विभागज्ञप्रयत्नपूर्वकत्वं न भविष्यति किं बाधकं जगद्वैचित्र्यस्य कर्मवैचित्र्यादेव संभवादतः पक्ष एव साध्याभावशङ्कया [7]शङ्कितविपक्षे वर्तमानो हेतुः शङ्कितव्यभिचार इत्यभिप्रेत्याऽऽह— कर्मण एवेति चेदिति। परिहरति— न परेति। कर्तृपरतन्त्रस्य कर्मणो निमित्तमात्रत्वा[8]त्स्वातन्त्र्येण निमित्तत्वासंभवात्कार्यवैचित्र्यस्य भङ्गप्रसङ्गो बाधकः कर्तारमन्तरेण। अतः पक्षे साध्याभावशङ्कानुपपत्तेर्न शङ्कितव्यभिचारित्वमिति भावः। संग्रहवाक्यस्य पूर्वपक्षभागं विवृणोति— यदिदमित्यादिना।

---

क्रमबद्ध यह जगत् भोक्ता और उसके क्रम के विभाग को जानने वाले किसी चेतन के प्रयत्नपूर्वक ही सम्भव हो सकता है क्योंकि कार्यरूप होने के कारण पूर्वोक्त लक्षणों वाला सिद्ध होता है। जैसा कि गृह, प्रासाद, रथ या शय्या और आसनादि सभी कार्यरूप अनित्य पदार्थ देखे जाते हैं तथा इनके विपरीत पक्ष में दृष्टान्त रूप आत्मा आदि नित्य पदार्थ हैं।

**शंका :—** यदि कहो कि कर्म से ही जगत् की उत्पत्ति होती है ऐसा कहना ठीक नहीं क्योंकि परतन्त्र होने के कारण जगत् उत्पत्ति में निमित्त कर्म हो सकता है (मीमांसकों का कहना है) कि यह जो प्राणियों के उपभोग की विचित्रता है और उनके साधनों की विभिन्नता एवं देश, काल तथा निमित्त के अनुरूप नियमित प्रवृत्ति-निवृत्ति का क्रम है। वह किसी नित्य सर्वज्ञ का बनाया हुआ नहीं,

---

१. प्रतीकस्यार्थं वदंस्तावन्मात्रोक्तौ व्यभिचारमाह—विचित्रत्वादित्यादिना। २. आत्मादीति—आदिनाऽऽकाशादिग्रहस्तथा चात्मनो रूपमाकाशादिभ्यो विचित्रं विलक्षणं न च प्रयत्नपूर्वमिति व्यभिचारः स्यादित्यर्थः। अनादिरनिर्वाच्या मायैव वाऽऽदिशब्दग्राह्या। (आकाशादिरूपं चात्मविलक्षणम्) ३. अबुद्धिपूर्वकार्युन्मत्तादिस्तत्कार्येऽपि घुणाक्षरन्यायेन वैचित्र्ये तु भोक्तुरेवादृष्टानुकूलः प्रयत्नः। उन्मत्ताद्यन्तर्यामिण एव वा प्रयत्नः पक्षधर्मताबलात्सिध्यतीति भावः। ४. ननु साध्ये कर्मपदेन धर्माधर्मयोर्विवक्षितत्वात्तस्य च ज्ञानं तक्षादेर्न संभवतीति साध्यवैकल्यं तदवस्थमेवेत्यत आह—यथेतिशब्दात् प्रतीयमानमर्थमनुरुध्यैव साधनदूषणे भवतः। तथा च कर्मशब्देन प्रतीयमानगृहस्वामिकृतवेतनदानादेर्ज्ञानस्य तक्षादेः संभवान्न साध्यवैकल्यमिति भावः। ५. नाभिप्रायवशात्—पक्षे साध्यसमन्वयानुगुणविवक्षितशब्दार्थमादाय साधनदूषणे न भवत इत्यर्थः। ६. आकाशादीति—परमताभिप्रायकम्। ७. शङ्कितविपक्ष इति—पक्षविशेषणं तथा च साध्याभावशङ्कया शङ्कितविपक्षे पक्ष एव वर्तमान इत्यन्वयः। साध्याभाववत्वेन निश्चितस्तु विपक्ष एवोच्येत तद्वत्त्वेन शङ्कितस्तु शङ्कितविपक्ष इति भेदः। ८. स्वातन्त्र्येण निमित्तत्वासंभवादिति—कर्तैव हि स्वतन्त्रं निमितं भवति यदुक्तं स्वतन्त्रः कर्तेति कर्मणस्तु कर्तृजन्यत्वान्न कर्तृत्वमेव संभवतीति भावः।

ब्रह्म ह देवेभ्यो विजिग्ये 'अविज्ञातं विजानता विज्ञातमविजानताम्' इत्यादिश्रवणाद्यदस्ति तद्विज्ञातं प्रमाणैर्यन्नास्ति तदविज्ञातं शशविषाणकल्पमत्यन्तमेवासद्दृष्टम्। तथेदं ब्रह्माविज्ञातत्वादसदेवेति मन्दबुद्धीनां व्यामोहो मा भूदिति तदर्थेयमाख्यायिकाऽऽरभ्यते। तदेव हि ब्रह्म सर्वप्रकारेण प्रशास्तृ देवानामपि परो देव ईश्वराणामपीश्वरो दुर्विज्ञेयो देवानां जयहेतुरसुराणां पराजयहेतुस्तत्कथं नास्तीत्येतस्यार्थस्यानुकूलानि ह्युत्तराणि वचांसि दृश्यन्ते। अथवा ब्रह्मविद्यायाः स्तुतये। कथं? ब्रह्मविज्ञानाद्ध्यग्न्यादयो देवा देवानां श्रेष्ठत्वं जग्मुस्ततोऽप्यतितरामिन्द्र इति। अथवा दुर्विज्ञेयं ब्रह्मेत्येतत्प्रदर्श्यते। येनाग्न्यादयोऽतितेजसोऽपि क्लेशेनैव ब्रह्म विदितवन्तस्तथेन्द्रो देवानामीश्वरोऽपि सन्निति वक्ष्यमाणो[1]पनिषद्विधिपरं वा सर्वं ब्रह्मविद्याव्यतिरेकेण

---

उत्तरग्रन्थस्य प्रतीकमादाय [2]तात्पर्यमाह—ब्रह्मेत्यादिना। [3]अभिप्रेतं तात्पर्यमाह—वक्ष्यमाणेति। [4]उत्तमाधिकारिगोचर[5]मविषयं ब्रह्मात्मताज्ञानं पूर्वत्रोक्तमुत्तरत्र तु मन्दाधिकारिगोचरं सगुण-

---

## देवताओं का गर्व

"जानने वालों के लिये ब्रह्म अविज्ञात और न जानने वालों के लिये ब्रह्म ज्ञात है" इत्यादि श्रुतियों के श्रवण से मन्दबुद्धि पुरुषों को व्यामोह न हो जाय कि जो वस्तु है, वह प्रमाणों से जान ली जाती है और जो वस्तु नहीं है, वह अविज्ञात शशविषाण के तुल्य अत्यन्त असद्रूप ही देखी गयी है। अतः अविज्ञात होने के कारण ब्रह्म भी असत् ही है। बस इसी व्यामोह को दूर करने के लिये यह आख्यायिका प्रारम्भ की जाती है। सभी प्रकार से शासक देवताओं का भी परम देव, ईश्वरों का भी परमेश्वर, दुर्विज्ञेय देवताओं की विजय का कारण और असुरों की पराजय का कारण वह ब्रह्म ही है। फिर भला वह कैसे नहीं है; इस अर्थ के अनुकूल ही इस खण्ड के अग्रिम वाक्य देखे जाते हैं।

अथवा ब्रह्मविद्या की स्तुति के लिये (यह आख्यायिका) प्रारम्भ की जाती है। कैसे? क्योंकि ब्रह्मज्ञान से ही अग्नि आदि देवगण देवताओं में श्रेष्ठता को प्राप्त हुए थे। उनमें भी इन्द्र सबसे बढ़-चढ़ कर हुआ।

अथवा ब्रह्म दुर्विज्ञेय है, वह बात इस आख्यायिका से दिखलायी गयी क्योंकि परम तेजस्वी होते हुए भी अग्नि आदि कठिनाई से ही ब्रह्म को जान सके थे और देवताओं का स्वामी होता हुआ भी इन्द्र बड़ी कठिनाई से उस तत्त्व को जान सका था।

अथवा यह आख्यायिका आगे कहे जाने वाली सम्पूर्ण उपनिषद् विधिपरक है, या ब्रह्मविद्या से

---

१. उपनिषदुपास्तिः। २. अविवक्षितं गौणमिदं तात्पर्यम्। ३. अभिप्रेतं मुख्यम्। ४. उत्तमाधिकारिगोचरं तन्निमित्तं तदुद्देश्यकमिति यावत्। ५. अविषयमिति—ब्रह्मात्मनो यत्र विषयतया न भानं तदित्यर्थः।

**तन्न नित्यसर्वज्ञकर्तृकम्। किं तर्हि कर्मण एव [१]तस्या[२]चिन्त्यप्रभावत्वात्सर्वैश्च फलहेतुत्वाभ्युपगमात्। सति कर्मणः फलहेतुत्वे किमीश्वराधिककल्पनयेति न नित्यस्येश्वरस्य नित्यसर्वज्ञशक्तेः फलहेतुत्वं चेति चेत्। न कर्मण एवोपभोगवैचित्र्याद्युपपद्येत। कस्मात्। कर्तृतन्त्रत्वात्कर्मणः। चितिमत्प्रयत्ननिर्वृत्तं हि कर्म तत्प्रयत्नोपरमादुपरतं सद्देशान्तरे कालान्तरे वा नियतनिमित्तविशेषापेक्षं कर्तुः फलं जनयिष्यतीति [३]न युक्तमनपेक्ष्यान्य[४]दात्मनः प्रयोक्तृ, कर्तैव फलकाले प्रयोक्तेति चेन्मया निर्वर्तितोऽसि त्वां प्रयोक्ष्ये फलाय यदात्मानुरूपं फलमिति, न, देशकालनिमित्तविशेषानभिज्ञत्वात्। यदि हि कर्ता देशविशेषाभिज्ञः सन्स्वातन्त्र्येण कर्म नियुञ्ज्यात्ततोऽनिष्टफलस्याप्रयोक्ता**

---

**यदिदमीश्वरवादिभिरपि वैषम्यनैर्घृण्यदोषपरिहाराय कर्मणो जगद्वैचित्र्यहेतुत्वमिष्टं तत्[५]संप्रतिपन्नं विहायापूर्व ईश्वरः कल्प्यते धर्मी तस्य फलहेतुत्वं च धर्मः कल्पनीय इति गौरवं स्यादित्याह—**न नित्यस्येश्वरस्येति। **सति लाघवे गौरवं दूषणं स्यान्नेह तदस्तीत्यभिप्रेत्य सिद्धान्तं विवृणोति—** न कर्मण एवेत्यादिना। **आत्मनोऽन्यत्प्रवर्तकमनपेक्ष्य कर्म चेन्न फलं जनयति, तर्हि कर्ता जीव एव प्रयोजकोऽस्त्विति शङ्कित्वा परिहरति—** कर्तैवेत्यादिना। **अनिष्टफलभोगसिद्ध्यन्यथानुपपत्त्या कर्तुः कर्मनियोक्तृत्वं न संभवति चेत्तर्हि निर्निमित्तमेव कर्म फलाकारेण परिणमत इति[६]जरत्कर्ममीमांसकानां**

---

तो फिर किसका है? यह तो केवल कर्म का ही फल है क्योंकि कर्म अचिन्तनीय प्रभाव से युक्त है एवं फल के कारणरूप से कर्म को सभी ने स्वीकार किया है। इस प्रकार फल के हेतुरूप से कर्म को स्वीकार कर लेने पर इससे अधिक ईश्वर कल्पना से क्या लाभ है। अतः नित्य सर्वज्ञ सर्वशक्तिमान् ईश्वर में फल हेतुत्व नहीं है।

**समाधान :—** कर्ममात्र से ही प्राणी के उपभोग की विचित्रता आदि कहना युक्ति-युक्त नहीं हे, क्योंकि कर्म कर्त्ता के अधीन होता हे, चेतन पुरुष के प्रयत्न से सम्पन्न हुआ कर्म उसके प्रयत्न के हटते ही निवृत्त हो जाता है, पुनः वह देशान्तर अथवा कालान्तर में किसी निश्चित निमित्त की विशेष अपेक्षा से ही कर्त्ता को फल दे सकेगा। ऐसी स्थिति में यह कहना उचित नहीं है कि कर्म अपने किसी प्रवर्तक की अपेक्षा किये विना ही फल दे देता है। यदि कर्त्ता जीव को ही फल देने में (कर्मानुसार फल का) प्रवर्तक माना जाय तो (उस समय कर्त्ता अपने से निष्पादित कर्म को कहेगा) मैंने तुझे निष्पन्न किया था, अब मैं ही तुझे फल देने के लिये प्रवृत्त कर रहा हूँ। अतः आत्मानुरूप ही मुझे फल दे, किन्तु ऐसा कहना सम्भव नहीं है क्योंकि कर्त्ता जीव, देश, काल और निमित्त विशेष से सर्वथा अनभिज्ञ है। यदि कर्त्ता जीव ही देशादि विशेष का ज्ञाता होता हुआ फल देने के लिये स्वतन्त्रतापूर्वक कर्म को प्रवृत्त करेगा तो अनिष्ट फल के लिये उसे कभी प्रेरणा नहीं दे

---

१. तस्य—कर्मणः। २. अचिन्त्यप्रभावत्वादिति—"गहना कर्मणो गति"रिति भगवदुक्तेरिति भावः। ३. न युक्तमित्यादि—न हि धनुर्निर्मात्रा निर्मितमेव धनुर्धानुष्कचोदनां विना प्रहरणं भवतीति सुप्रसिद्धमेवेति भावः। ४. आत्मन इति—स्वस्य स्वस्माद्वा। ५. संप्रतिपन्नम्—उभयसंमतम्। ६ जरदिति—प्राचीनेत्यर्थः। कर्मेति ब्रह्ममीमांसकव्यावृत्तये विशेषणम्। (जीर्यतेरतृन्)

**ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो**
**विजये देवा अमहीयन्त। त ऐक्षन्तास्मा-**
**कमेवायं विजयोऽस्माकमेवायं महिमेति ।।१४।।१।।**

यह प्रसिद्ध है कि पूर्वोक्त ब्रह्म ने (देवासुर संग्राम में) देवताओं के लिये (असुरों को) जीता। उसी ब्रह्म की विजय में देवता लोग महिमान्वित हुए (उस बात को भूलकर) देवताओं ने सोचा, यह विजय हमारी ही है और यह महिमा भी हमारी ही है।।१।।

---

**प्राणिनां कर्तृत्वाद्यभिमानो मिथ्येत्येतद्दर्शनार्थं वाऽऽख्यायिका। यथा देवानां जयाद्यभिमानस्तद्वदिति। ब्रह्म[1]यथोक्तलक्षणं परं ह किल [2]देवेभ्योऽर्थाय विजिग्ये जयं लब्धवद्देवानामसुराणां च सङ्ग्रामेऽसुराञ्जित्वा [3]जगदरातीनी[4]श्वरसेतुभेतॄन्देवेभ्यो जयं तत्फलं च प्रायच्छज्जगतः स्थेम्ने। तस्य ह किल ब्रह्मणो विजये देवा अग्न्यादयोऽमहीयन्त महिमानं प्राप्तवन्तस्तदाऽऽत्मसंस्थस्य प्रत्यगात्मन ईश्वरस्य सर्वज्ञस्य सर्वक्रियाफलसंयोजयितुः प्राणिनां सर्वशक्तेर्जगतः स्थितिं चिकीर्षोरयं जयो महिमा चेत्यजानन्तस्ते देवा ऐक्षन्तेक्षितवन्तोऽग्न्यादिस्वरूपपरिच्छिन्नात्मकृतोऽस्माकमेवायं विजयोऽस्मा-**

---

**ब्रह्मोपासनं वक्ष्यते। [5]तत्परं वक्ष्यमाणं सर्ववाक्यजातं [6]स्पष्टविधिदर्शनात्। अतोऽत्रैव तात्पर्यमर्थान्तरतात्पर्यप्रदर्शनं तु संभावनामात्रेणेति द्रष्टव्यम्। ईश्वरस्य सेतवो मर्यादा वर्णाश्रमादिधर्मास्तद्भेदकान्। जगतः स्थेम्ने स्थैर्याय।।१४।।१।।**

---

भिन्न प्राणियों का कर्तृत्व-भोक्तृत्वादि अभिमान मिथ्या है। जिस प्रकार देवताओं का विजय आदि का अभिमान है, वैसे ही अन्य व्यक्ति का अभिमान भी मिथ्या ही है। इस बात को बतलाने के लिये यह आख्यायिका है।

यह प्रसिद्ध है, पूर्वोक्त लक्षणों से युक्त परब्रह्म ने देवताओं के लिये विजय प्राप्त की अर्थात् देवासुर संग्राम में संसार के शत्रु एवं ईश्वर की मर्यादा भंग करने वाले असुरों को जीतकर जगत् की

---

१. यथोक्तलक्षणमिति—श्रोत्रादेः श्रोत्रादिरूपमित्यर्थः। २. देवेभ्योऽर्थायेति—अनेन देवेभ्यो इति तादर्थ्ये चतुर्थीति सूच्यते देवानां कृते इत्यर्थः। ३. जगदरातीनिति—"प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिता" इति स्मृतेः। ४. जगदरातित्वाय विशिनष्टि—ईश्वरेति। ५. तत्परमिति—वक्ष्यमाणसगुणब्रह्मोपासनविधेरर्थवादविधया शेषभूतमिति यावत्। ६. स्पष्टविधिदर्शनादिति—तस्यैष आदेश इत्यादाविति शेषः। विधेश्चेतिकर्तव्यतात्वेनार्थवादसापेक्षत्वादेवेति भावः।

**स्यात्। [१]न च निर्निमित्तं तदनिच्छया[२]ऽऽत्मसमवेतं तच्चर्मवद्विकरोति कर्म। नचाऽऽत्मकृतमकर्तृसमवेतमयस्कान्तमणिवदाक्रष्टृ भवति प्रधानकर्तृसमवेतत्वात्कर्मणः। भूताश्रयमिति चेन्न साधनत्वात्। [३]कर्तृक्रियायाः साधनभूतानि भूतानि क्रियाकाले[४]ऽनुभूतव्यापाराणि समाप्तौ च हलादिवत्कर्त्रा [५]परित्यक्तानि न फलं कालान्तरे कर्तुमुत्सहन्ते [६]न हि हलं क्षेत्राद्व्रीहीन्गृहं प्रवेशयति [७]भूतकर्मणोश्चाचेतनत्वा[८]त्स्वतःप्रवृत्त्यनुपपत्तिः।**

---

मतमाशङ्क्याऽऽह—न च निर्निमित्तमिति। [९]कर्तुरनिच्छया कर्म विकरोतीत्यत्र दृष्टान्ताभावा[१०]च्चर्मणोऽपि विकारस्य[११]सनिमित्तत्वादित्यर्थः। [१२]यच्च सौगतेनोच्यते फलकालपर्यन्तं कर्तुरवस्थानाभावान्न कर्तृसमवेतं कर्म किंतु क्षणिकविज्ञानेनाऽऽत्मना कृतं कदाचित्फलस्याऽऽक्रष्टृ भवति। यथाऽयस्कान्तो मणिः कदाचिच्चेतनेन [१३]प्रयुक्तो [१४]ऽन्यदाऽपि लोहस्य प्रेरको भवति तद्वदिति तत्राऽऽह—न चाऽऽत्मकृतमिति। करणादीनि कारकाणि यः प्रेरयन्करोति स [१५]प्रधानकर्ता। तत्समवेतं कर्म [१६]प्रसिद्धं [१७]तस्य च फलकालपर्यन्तं स्थायित्वमेष्टव्यम्। अन्यथाऽकृताभ्यागमकृतविप्रनाप्रसङ्गा[१८]त्प्रत्यभिज्ञाप्रामाण्याच्चेत्यर्थः। लोकायतिकाभिप्रायमुद्भाव्य दूषयति—भूताश्रयमित्यादिना। [१९]आधुनिककर्ममीमांसकानां मतमुद्भावयति—

---

सकता। इसके अतिरिक्त बिना निमित्त के कर्त्ता की इच्छा के बिना जीवात्मा के साथ समवाय सम्बन्ध से रहने वाला कर्म स्वयं ही चमड़े की भाँति विकार को प्राप्त नहीं हो सकता।

(यदि आत्मा क्षणिक विज्ञानरूप माना जाय तो ऐसे) आत्मा का किया हुआ कर्म कर्त्ता में समवेत न होकर चुम्बक पत्थर की भाँति अपने स्वयं ही हल्का आकर्षक नहीं हो सकता क्योंकि कर्म का कर्त्ता के साथ नित्य सम्बन्ध है। यदि कहो कि कर्म भूतों के आश्रित है, तो ऐसा कहना भी ठीक नहीं क्योंकि भूत तो केवल क्रिया के साधन हैं, कर्त्ता की क्रिया के साधनरूप भूत क्रिया काल में उसके व्यापार का अनुभव करते हैं एवं व्यापार के समाप्त होते ही हल आदि की भाँति कर्त्ता द्वारा त्याग दिये जाते हैं। ऐसे भूत कालान्तर भावी फल देने में समर्थ नहीं हो सकते। हल धान्यों को खेत से उठा

---

१. ननु यथा शरीरे चर्म वर्धतेऽपक्षीयते च शोफस्फोटादिविकारं च लभते न च तत्र कर्तुःशरीरिण इच्छादिनिमित्तं भवति तद्वत्कर्मविकारो निर्निमित्त एव स्यादितयाशङ्क्य परिहरति—न च निर्निमित्तमित्यादिना चर्मविकारस्यापि कर्मनिमित्तकत्वाद् दृष्टान्तासिद्धिरिति भावः। २. आत्मसमवेतमिति—आत्मसंबद्धमित्यर्थः। ३. कर्तृक्रियायाः साधनभूतानीति शरीराकारेण परिणतानि भूतानि न कर्ता भवितुमर्हन्ति करणत्वाल्लाङ्गलादिवदिति भावः। ४. भूतानां करणत्वं स्फुटयति—अनुभूतव्यापाराणीति। सव्यापाराणीति यावत्। ५. परित्यक्तानीति—प्रस्तुतव्यापारपराङ्मुखीकृतानीति यावत्। ६. करणत्वेनानुभूयमानस्यापि कर्माश्रयत्वाभ्युपगमे कर्तृत्वापत्त्या नेदमुपपद्येतेत्याशयेनाह—न हीति। ७. इतश्च भूतकर्मप्रयोक्ता चेतनोऽभ्युपगन्तव्य इत्याह—भूतकर्मणोश्चेत्यादिना। ८. स्वत इति—चेतनाधिष्ठानमनपेक्ष्येत्यर्थः। ९. कर्तुरनिच्छयेति—कर्म न कर्त्रनिच्छया विकर्तुमर्हति कर्तृसमवेतत्वात्तच्चर्मवदिति भावः। १०. ननु चर्मविकार एव दृष्टान्तो भविष्यतीत्यत आह—चर्मणोऽपीति। ११. सनिमित्तत्वादिति—कर्मनिमित्तकस्य परम्परयेच्छानिमित्तकत्वं दुर्वारं कर्मण इच्छामूलकत्वादिति भावः। १२. स्वरूपासिद्ध्या सौगतचोद्यमनूद्य दूषयितुमाह—यच्चेति। १३. प्रयुक्त इति—लोहाभिमुख्येन स्थापित इति यावत्। १४. अन्यदाऽपीति—प्रयोगकालादन्यस्मिन् कालेऽपीत्यर्थः। १५. प्रधानकर्तेति—कारकेषु प्रधानश्चासौ कर्ता चेत्यर्थः। १६. प्रसिद्धमिति—तथा च न कर्तृसमवेतं कर्मेति सौगतमतं प्रसिद्धिविरोधेन बाधितमिति भावः। १७. तस्य—प्रधानस्य कर्तुः। १८. योऽहमचूचुरं सोऽहमिदानीं कारागारं प्रवेशित इत्यादिप्रत्यभिज्ञाबलाच्च कर्तुः स्थायित्वमेव प्रामाणिकमित्याह—प्रत्यभिज्ञाप्रामाण्याच्चेति। १९. आधुनिकेति—नवीनेत्यर्थः।

**तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव तन्न व्यजानत किमिदं यक्षमिति ।।१५।।२।।**

देवताओं के (इस मिथ्या) अभिप्राय को उस ब्रह्म ने जान लिया (और वह) देवताओं के सामने (अपने योगमाहात्म्य से निर्मित यक्ष रूप में) प्रकट हुआ। (तब देवता लोग) उसे न जान सके कि यह यक्ष कौन है।।२।।

---

कमेवायं महिमाऽग्निवाय्विन्द्रत्वादिलक्षणो जयफलभूतोऽस्माभिरनुभूयते नास्मत्प्रत्यगात्मभूतेश्वरकृत इति ।।१४।।१।।

एवं मिथ्याभिमानेक्षणवताम्—

तद्ध किलैषां मिथ्येक्षणं विजज्ञौ विज्ञातवद्ब्रह्म। सर्वेक्षितृ हि तत्सर्वभूतकरण-प्रयोक्तृत्वाद्देवानां च मिथ्याज्ञानमुपलभ्य मैवासुरवद्देवा मिथ्याभिमानात्पराभवेयुरिति तदनुकम्पया देवान्मिथ्याभिमानापनोदनेनानुगृह्णीयामिति तेभ्यो ह किलार्थाय प्रादुर्बभूव

---

स्वयोगमाहात्म्यनिर्मितेन सत्त्वरजस्तमसां त्रयाणां गुणानां योगो [1]युक्ति[2]र्घटनं माया तन्माहात्म्ये

---

स्थिति के लिये उस विजय और उसका फलदेवताओं को दे दिया। उस ब्रह्म की विजय में अग्नि आदि देवगण महिमा को प्राप्त हुए, यह बात भी प्रसिद्ध है।।१।।

## यक्ष का प्रादुर्भाव

उस समय अन्तःकरण में स्थित अन्तरात्मा सम्पूर्ण प्राणियों के कर्मफल का संयोजक सर्वशक्तिमान् जगत् स्थिति को चाहने वाले ईश्वर की ही यह सम्पूर्ण विजय और महिमा है। इस बात को न जानने के कारण और आत्मा को अग्नि आदि रूपों में परिच्छिन्न मानने के कारण देवताओं ने समझा कि हम लोगों की ही यह विजय हुई है और विजय के फलस्वरूप अग्नि, वायु और इन्द्रभाव रूप यह महिमा भी हमारी है और हम ही इसका अनुभव करते हैं। यह विजय या महिमा हमारे अन्तरात्मरूप किसी ईश्वर की नहीं है। ऐसे मिथ्याभिमान से विभ्रान्त उन देवताओं के इस मिथ्या ज्ञान को ब्रह्म ने जान लिया क्योंकि वह सम्पूर्ण जीवों के अन्तःकरणों का प्रेरक होने से सबका द्रष्टा है। कहीं इस मिथ्या ज्ञान को प्राप्त कर इस मिथ्या ज्ञान से असुरों की भाँति देवों का भी पराभव न हो जाय। इस प्रकार दयापूर्वक देवताओं के मिथ्या ज्ञान को निवृत्त कर मैं उन्हें अनुगृहीत करूँ। ऐसा विचार

---

१. योगो न संबन्धमात्रं तेषां तस्य सदातनत्वेन तादृशविचित्ररूपस्यापि तथात्वापातादतो व्याचष्टे—युक्तिरिति। २. तां विशदयति—घटनमिति। यथापेक्षं गुणप्रधानीभावेन विवर्तनमिति यावत्। सा च माया यथा ह्यैन्द्रजालिको राजसादिकतिपयपदार्थान्क्रमकालविन्यासादिभेदैर्घटयित्वा नानाविचित्रार्थान्दर्शयन्मायां करोतीत्युच्यते तद्वत्।

**[1]वायुवदिति चेन्नासिद्धत्वात्। न हि वायोरचितिमतः स्वतःप्रवृत्तिः [2]सिद्धा रथादिष्वदर्शनात्। शास्त्रात्कर्मण एवेति चेच्छास्त्रं हि क्रियातः फलसिद्धिमाह ने[3]श्वरादेः स्वर्गकामो यजेतेत्यादि। न च प्रमाणाधिगतत्वादानर्थक्यं युक्तम्। न चेश्वरास्तित्वे प्रमाणान्तरमस्तीति चेत्। न दृष्टन्यायहानानुपपत्तेः। क्रिया हि द्विविधा दृष्टफलाऽदृष्टफला च।**

---

शास्त्रादित्यादिना। **यजेतेत्याख्यातपदात्सामान्येन [4]समीहितसाधनं यागः [5]प्रतीयते। कस्य समीहितस्य साधनमितिविशेषाकाङ्क्षायां स्वर्गकामपदसंनिधानात्काम्यमानस्वर्गसाधनत्वं यद्यप्यवगम्यते तथाऽपि [6]क्षणिकस्य यागस्य कालान्तरीयस्वर्गसाधनत्वासंभवान्निष्फलत्वं शङ्क्येतेत्याशङ्क्याऽऽह**—न चेति। **औषधपानादेः कर्मणः [7]स्थायिसंस्कारद्वारेण कालान्तरीयारोग्यादिफलहेतुत्वप्रसिद्धेर्यागस्य श्रुतसाधनत्वनिर्वाहाय स्थाय्यवान्तरापूर्वं परिकल्पयते तेन नत्वानर्थक्यं निर्दोषवाक्याधिगतत्वादित्यर्थः। श्रुतसाधनत्वसिद्ध्यन्यथानुपपत्त्या किमितीश्वर एव नेष्यते तत्राऽऽह**—न चेश्वरेति। **नेयमर्थापत्तिरीश्वरास्तित्वे प्रमाणमन्यथाऽप्युपपन्नत्वात्। न च मानान्तरमस्ति। तद्विषयश्रुत्यादे[8]रर्थवादत्वादित्यर्थः। नापूर्वद्वारेण श्रुतनिर्वाहः कल्पनीयः। यद्[10]व्यवहितफलं कर्म तच्चैतन्यप्रयुक्तफलमिति [11]दृष्टाया व्याप्तेर्हानिप्रसङ्गादतः श्रुतसाधनत्वसिद्ध्यन्यथानुपपत्त्येश्वरः फलदाता कल्पनीय इत्याह**—न दृष्टेति। **संग्रहवाक्यं विवृणोति**—क्रिया हीत्यादिना। **फलोदयेनापवर्गो नाशो यस्याः सा फलापवर्गिणी न**

---

कर घर में प्रवेश नहीं कराता है। अतः अचेतन होने के कारण न भूतों में और न कर्मों में ही फल देने के लिये स्वतः प्रवृत्ति सम्भव है। यदि कहो कि अचेतन वायु की भाँति उनकी प्रवृत्ति स्वतः हो सकती है, तो ऐसा कहना भी ठीक नहीं, क्योंकि अचेतन वायु की स्वतः प्रवृत्ति सिद्ध न होने के कारण यह पक्ष भी असिद्ध है। रथादि अचेतन पदार्थों में स्वतः प्रवृत्ति नहीं देखी जाती है।

(मीमांसक) शास्त्रानुसार कर्म से ही फल मिलता है **"स्वर्गकामो यजेत"** इत्यादि शास्त्र क्रिया से ही फल की सिद्धि बतलाता है, ईश्वर आदि से नहीं। इस प्रकार प्रमाण सिद्ध होने के कारण इस पक्ष को अनर्थक कहना ठीक नहीं। साथ ही ईश्वर की सत्ता में भी (अनुमान एवं अर्थापत्ति को छोड़कर) अन्य कोई प्रमाण नहीं है।

सिद्धान्ती—ऐसा कहना ठीक नहीं है क्योंकि दृष्टन्याय को त्यागना अनुचित है। दृष्टफल एवं

---

१. अचेतनप्रवृत्तेश्चेतनाधिष्ठानपूर्वकत्वव्यभिचारं शङ्कते—वायुवदिति चेदिति। २. सिद्धा—निश्चिता प्रमाणेनेत्यर्थः। ३. ईश्वरादेः—सकाशादित्यर्थः। ४. समीहितसाधनमिति—आख्यातस्य भावनावाचकत्वेऽपि यागस्येष्टसाधनत्वं भावनागर्भलिङ्गकानुमानादवगन्तव्यम् (वाचकत्वेऽपीत्यपिस्त्वर्थस्तादृग्भट्टमते त्वित्यर्थः)। तथाहि प्रयोगः—विमतमिदमिष्टसाधनमप्यत्र प्रवर्ततामित्याकारकाप्तनिष्ठव्यापारविशेषविषयत्वाद्यन्नैवं तन्नैवं यथा प्रतारकवाक्योपस्थितिमिति। ५. प्रतीयत इति—इष्टसाधनत्वमेव प्रवर्तनात्वेन रूपेण वेदे लिङ्गाद्यर्थ इति हि मण्डनमिश्रा वदन्तीत्यवधेयम्। ६. इदं देवतायै न ममेत्येवं देवतोद्देशेन द्रव्यत्यागरूपस्य यागस्य मनः संकल्पमात्रतया क्षणमात्रावस्थायित्वादाह—क्षणिकस्येति। ७. स्थायिसंस्कारद्वारेणेति—स्थायिनो ये संस्कारा औषधस्यैव कालादिसंस्कृताः सूक्ष्मावयवास्तद्द्वारेति मर्मार्थः। ८. तद्विषयेति—ईश्वरप्रतिपादकेत्यर्थः। ९. अर्थवादत्वादिति—कर्मणामेव फलदातृत्वेन राजादीश्वरतुल्येश्वरत्वेन स्तुतिपरत्वादित्यर्थः। १०. व्यवहितेति—कालान्तरितेत्यर्थः। ११. दृष्टायाः—राजादिप्रयुक्ते भृत्यादिफले दृष्टाया इत्यर्थः।

**तेऽग्निमब्रुवञ्जातवेद एतद्विजानीहि किमेतद्यक्षमिति तथेति ।।१६।।३।।**

**तदभ्यद्रवत्तमभ्यवदत्कोऽसीत्यग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति ।।१७।।४।।**

उन देवताओं ने अग्नि से कहा—हे जातवेद! इसे जानो तो सही, कि यह यक्ष कौन है? अग्नि ने कहा—अच्छी बात।।३।।

(अग्निदेव) उस यक्ष के पास गया। (कुछ पूछने की इच्छा से आये हुए उस) अग्नि से यक्ष ने पूछा—तू कौन है? उसने कहा—मैं अग्नि हूँ, निश्चय ही मैं जातवेदा हूँ।।४।।

---

स्वयोगमाहात्म्यनिर्मितेनात्यद्भुतेन विस्मापनीयेन रूपेण देवानामि[१]न्द्रियगोचरे प्रादुर्बभूव। तत्प्रादुर्भूतं ब्रह्म न व्यजानत नैव विज्ञातवन्तो देवाः। किमिदं [२]यक्षं पूज्यं महद्[३]भूतमिति ।।१५।।२।।

ते तदजानन्तो देवाः सान्तर्भयास्तद्विजिज्ञासवो[४]ऽग्निमग्रगामिणं [५]जातवेदसं [६]सर्वज्ञकल्पमब्रुवन्नुक्तवन्तो हे जातवेद एतदस्मद्गोचरस्थं यक्षं विजानीहि विशेषतो बुध्यस्व त्वं नस्तेजस्वी किमेतद्यक्षमिति। तथाऽस्त्विति। तद्यक्षमभ्यद्रवत्तत्प्रतिगतवानग्निः।

---

न निर्मितं ते नेत्यर्थः ।।१५।।२।।

---

कर अपनी योगमाया के प्रभाव से सबको आश्चर्य में डालने वाले अति अद्भुत रूप से युक्त हो, वह ब्रह्म देवताओं की इन्द्रियों का विषय होकर प्रकट हो गया। उस प्रादुर्भूत ब्रह्म को देव लोग न जान सके कि यह पूजनीय महान् कौन है।।२।।

## अग्नि की परीक्षा

उस यक्ष को न जानने वाले देवताओं ने भीतर ही भीतर डरते हुए उसे जानने की इच्छा से सर्वप्रथम सर्वज्ञकल्प जातवेदा अग्रगामी अग्नि से कहा कि हे जातवेद! हमारे समक्ष स्थित इस यक्ष को जानो अर्थात् विशेषरूप से समझो कि यह हम सब में अधिक तेजस्वी यक्ष कौन है।।३।।

बहुत अच्छा, ऐसा कहकर अग्नि उस यक्ष की ओर अत्यन्त तेजी से गया। इस प्रकार गये हुए (यक्ष के तेज से) तेजहीन हो जाने के कारण अपने समीप में चुपचाप खड़े हुए कुछ पूछने की इच्छा

---

१. इन्द्रियगोचर इति—इन्द्रियसंनिकर्षयोग्ये देश इति यावत्। २. यक्ष पूजायामित्यतः कर्मणि घञित्यभिप्रायेणाह—यक्षं पूज्यमिति। ३. भूतम्—सत्त्वम्। ४. अग्निमग्रगामिणमिति—तदुक्तं निरुक्ते अग्निः कस्मादग्रणीर्भवतीति उत्तरषट्के दैवतकाण्डे चतुर्थपादे। ५. जातवेदसं सर्वज्ञकल्पमिति—तथा च निरुक्तं "जातवेदाः कस्माज्जातानि वेदेत्यादि।" उ. ष. दै. ५ पा. १। ६. जातं जनिमत्सर्वं वेत्तीति जातवेदा इति व्युत्पत्तिमाश्रित्याह—सर्वज्ञकल्पमिति। ब्रह्मण एव निरतिशयसार्वज्ञ्यात्कल्पप्रयोगः।

**दृष्टफलाऽपि द्विविधाऽनन्तरफलाऽऽगामिफला च, अनन्तरफला गतिभुजिलक्षणा। कालान्तरफला च कृषिसेवादिलक्षणा। तत्रानन्तरफला फलापवर्गिण्येव, कालान्तरफला तूत्पन्नप्रध्वंसिनी। आत्मसेव्याद्यधीनं हि कृषिसेवादेः फलं यतो न चो[२]भयन्यायव्यतिरेकेण स्वतन्त्रं कर्म ततो वा फलं दृष्टम्। [३] तथा च कर्मफलप्राप्तौ न दृष्टन्यायहानमुपपद्यते। तस्माच्छान्ते यागादिकर्मणि नित्यः कर्तृकर्मफलविभागज्ञ ईश्वरः सेव्यादिवद्यागाद्यनुरूपफलदातोपपद्यते स चाऽऽत्मभूतः सर्वस्य सर्वक्रियाफलप्रत्ययसाक्षी नित्य-**

---

फलदातारं [४] पृथगपेक्षत इत्यर्थः। उत्पन्नप्रध्वंसिनीति। उत्पन्ना सती फलमदत्त्वैव प्रध्वंसते ततस्तत्र फलदाता कालान्तरेऽपेक्ष्यत इत्यर्थः। यागादिफलं कर्माद्यभिज्ञेन दीयमानं व्यवहितफलत्वात्सेवाफलवदित्याह—तस्माच्छान्ते यागादीति। ननु जीवस्तावत्स्वोपभोगसाधननियन्ता, तस्यापीश्वरः फलदानेन नियन्ता चेदिष्यते तर्हि नियन्तुः स्वव्यतिरिक्तनियम्यत्वाङ्गीकारादीश्वरस्याप्यन्यो नियन्ता [५] प्रसज्येत नियन्तृत्वाविशेषात्। अतोऽनवस्थाप्रसङ्गबाधितमनुमानमित्याशङ्क्याऽऽह—स चाऽऽत्मभूतः सर्वस्येति। [६] कल्पितभेदमात्रेण नियम्यनियामकभावोपपत्तेर्न तात्त्विकभेदावकाशः। [७] तात्त्विकभेदवत्त्वे च घटादिवत्कार्यत्वादिप्रसङ्गस्ततोऽतिरिक्तनियम्यत्वव्याप्त्यभावान्नानवस्थाप्रसङ्ग इत्यर्थः। राजवदीश्वरः फलदाता चेत्तर्हि निग्रहानुग्रहकर्तृत्वाद्रागादिमान्स्यात्तत्राह— सर्वक्रियाफलेति। यथा लौकिकसाक्षी कस्यचिज्जयहेतुरन्यस्य पराजयहेतुरपि न रागादिमान्कथ्यते। यथोपलब्धभाषित्वात्। तथेश्वरः क्रियादिसाक्षी रागादिमान्न भविष्यति। अननुरूपादातृत्वात्। राजाऽप्यसाधून्दण्डयन्साधून्परिरक्षन्न रागादिमान्कथ्यत इति भावः। [८] साक्षित्वे तर्हीश्वरस्येक्षणक्रिया स्यात्तत्राऽऽह—नित्येति।

---

अदृष्टफल वाली क्रिया दो प्रकार की है। दृष्टफल क्रिया के भी दो भेद हैं, तात्कालिक फल देने वाली (और इसी जीवन में) भावी फल देने वाली। इनमें गमन और भोजन आदि क्रियाएँ तात्कालिक फल देने वाली हैं तथा कृषि और सेवा आदि क्रियाएँ (किञ्चित् विलम्ब से) कालान्तर में फल वाली हैं।

---

१. आत्मा-स्वयं कर्षक इत्यर्थः। २. उभयन्यायव्यतिरेकेण स्वतन्त्रमिति-यथोक्तनियमद्वयमनपेक्ष्य जायमानमिति समुदायार्थः। ३. कालान्तरितादृष्टफला यागादिक्रिया कालान्तरादृष्टफलसेवादिसाम्यातिक्रमं नार्हतीत्युपसंहरन्नाह-तथा चेति। कर्मणी यथोक्तनियमद्वयातिलङ्घिनोऽसंभवे सतीत्यर्थः। ४. पृथगिति—कर्तुःसकाशात् पृथगित्यर्थः। ५. प्रसज्येतेति—ईश्वरः स्वव्यतिरिक्तनियम्यो नियन्तृत्वाज्जीववदिति प्रयोगसंभवादिति भावः। ६. दृष्टान्ते साध्यवैकल्येनोक्तानुमानं दूषयन्नाह—कल्पितेत्यादि। न च कल्पितभेदवतोर्नियम्यनियन्तृभावादर्शनादिदमसंगतमिति वाच्यं भेदमात्रस्याकल्पितत्वासंप्रतिपत्तेः। ततो जीवेशौ तात्त्विकभेदवन्तौ नियम्यनियामकत्वादितिनानुमातुं शक्यं दृष्टान्तासंभवादिति भावः। न चैवं न तात्त्विकभेदावकाश इति तात्त्विकभेदनिषेधोऽसंभवी प्रतियोग्यनुपस्थितेरिति शंकावकाशो भ्रान्त्योपस्थितनिषेधानुपरोधादित्यलम्। ७. तुष्यतु दुर्जन इति न्यायेन घटादीनां तात्त्विकभेदमभ्युपगम्याप्याह—तात्त्विकभेदवत्त्वे चेति। न च कल्पितभेदवतोर्नियम्यत्वाद्यनुपपत्तिरदर्शनादिति शङ्क्यं, बिम्बप्रतिबिम्बयोर्दर्शनात्। न चैवमपि कल्पितभेदवन्नियम्यत्वमीश्वरस्य दुर्वारमिति वाच्यं नेश्वरो नियम्य ईश्वरत्वाद्व्यतिरेकेण जीववदिति नियम्यत्वसामान्याभावानुमानेन पूर्वानुमानस्य सत्प्रतिपक्षत्वात्। नियम्यत्वे चेश्वरत्वानुपपत्तिरत्रानुकूलस्तर्कस्ततस्तर्करहितात्पूर्वस्माद्बलीयस्त्वमिति। ८. साक्षाद्द्रष्टा हि साक्षीत्युच्यते। यथाह भगवान् पाणिनिः— "साक्षाद्द्रष्टरि संज्ञायामि"तीत्याशयवान् रेकते साक्षित्वे तर्हीश्वरस्येक्षणक्रिया स्यादिति। तथा च विकारित्वसंसारित्वानित्यत्वादिदोषग्रासेनेश्वरत्वमेव व्याहन्येतेति शङ्कितुर्मनः।

